# श्रीहयग्रीवपूजाविधि स्तोत्रम् च

रुद्र उवाच ।
पुनर्देवार्चनं ब्रूहि हृषीकेश गदाधर ।
शृण्वतो नास्ति तृप्तिर्मे गदतस्तव पूजनम् ॥ १॥

हरिरुवाच ।
हयग्रीवस्य देवस्य पूजनं कथयामि ते ।
तच्छृणुष्व जगन्नाथो येन विष्णुः प्रतुष्यति ॥ २॥

मूलमन्त्रं महादेव हयग्रीवस्य वाचकम् ।
प्रवक्ष्यामि परं पुण्यं तदादौ शृणु शङ्कर ॥ ३॥

ॐ हौं क्ष्रौं शिरसे नमः इति प्रणवसंयुतः ।
अयं नवाक्षरोमन्त्रः सर्वविद्याप्रदायकः ॥ ४॥

अस्याङ्गानि महादेव ताञ्छृणुष्व वृषध्वज ।
ॐ क्ष्रां हृदयाय नमः ।
ॐ क्ष्रीं शिरसे स्वाहायुक्तं शिरः प्रोक्तं क्ष्रूं वषट् तथा ॥ ५॥

ॐकारयुक्ता देवस्य शिखा ज्ञेया वृषध्वज ।
ॐ क्ष्रैं कवचाय हुं वै कवचं परिकीर्तितम् ॥ ६॥

ॐ क्ष्रौं नेत्रत्रयाय वौषट् नेत्रं देवस्य कीर्तितम् ।
ॐ हः अस्त्राय फट् अस्त्रं देवस्य कीर्तितम् ॥ ७॥

पूजाविधिं प्रवक्ष्यामि तन्मे निगदतः शृणु ।
आदौ स्नात्वा तथाऽऽचम्य ततो यागगृहं व्रजेत् ॥ ८॥

ततः प्रविश्य विधिवत्कुर्याद्वै शोषणादिकम् ।
यं क्ष्रौं रमिति बीजैश्च कठिनीकृत्य लमिति ॥ ९॥

अण्डमुत्पाद्य च ततः ॐ कारेणैव भेदयेत् ।
अण्डमध्ये हयग्रीवमात्मानं परिचिन्तयेत् ॥ १०॥

शङ्खकुन्देन्दुधवलं मृणालरजतप्रभम् ।
गोक्षीरसदृशं तद्वत्सूर्यकोटिसमप्रभम् ।
शङ्खं चक्रं गदां पद्मं धारयन्तं चतुर्भुजम् ॥ ११॥

किरीटिनं कुण्डलिनं वनमालासमन्वितम् ।
सुरक्तं सुकपोलं च पीताम्बरधरं विभुम् ॥ १२॥

भावयित्वा महात्मानं सर्वदेवैः समन्वितम् ।
अङ्गमन्त्रैस्ततो न्यासं मूलमन्त्रेण वै तथा ॥ १३॥

ततश्च दर्शयेन्मुद्रां शङ्खपद्मादिकां शुभाम् ।
ध्यायेद्ध्यात्वार्चयेद्विष्णुं मूलमन्त्रेण शङ्कर ॥ १४॥

ततश्चावाहयेद्रुद्र देवता आसनस्य याः ।
ॐ हयग्रीवासनस्य आगच्छत च देवताः ॥ १५॥

आवाह्य मण्डले तास्तु पूजयेत्स्वस्तिकादिके ।
द्वारे धातुर्विधातुश्च पूजा कार्या वृषध्वज ॥ १६॥

समस्तपरिवाराय अच्युताय नम इति ।
अस्य मध्येऽर्चनं कार्यं द्वारे गङ्गाञ्च पूजयेत् ॥ १७॥

यमुनां च महादेवीं शङ्खपद्मनिधी तथा ।
गरुडं पूजयेदग्रे मध्ये शक्तिञ्च पूजयेत् ॥ १८॥

आधाराख्यां महादेव ततः कूर्मं समर्चयेत् ।
अनन्तं पृथिवीं पश्चाद्धर्मज्ञानौ ततोऽचयेत् ।
वैराग्यमथ चैश्वर्यमाग्नेयादिषु पूजयेत् ॥ १९॥

अधर्माज्ञानावैराग्यानैश्वर्यादींस्तु पूर्वतः ।
सत्त्वं रजस्तमश्चैव मध्यदेशेऽथ पूजयेत् ॥ २०॥

कन्दं नालं च पद्मं च मध्ये चैव प्रपूजयेत् ।
अर्कसोमाग्निसंज्ञानां मण्डलानां हि पूजनम् ।
मध्यदेशे प्रकर्तव्यमिति रुद्र प्रकीर्तितम् ॥ २१॥

विमलोत्कर्षिणी ज्ञाना क्रियायोगे वृषध्वज ।
प्रह्वी सत्या तथेशानानुग्रहाः शक्तयो ह्यमूः ॥ २२॥

पूर्वादिषु च पत्रेषु पूज्याश्च विमलादयः ।
अनुग्रहा कर्णिकायां पूज्या श्रेयोऽर्थिभिर्नरैः ॥ २३॥

प्रणवाद्यैर्नमोऽन्तैश्च चतुर्थ्यन्तैश्च नामभिः ।
मन्त्रैरेभिर्महादेव आसनं परिपूजयेत् ॥ २४॥

स्नानगन्धप्रदानेन पुष्पधूपप्रदानतः ।
दीपनैवेद्यदानेन आसनस्यार्चनं शुभम् ॥ २५॥

कर्तव्यं विधिनानेन इति ते हर कीर्तितम् ।
ततश्चावाहयेद्देवं हयग्रीवं सुरेश्वरम् ॥ २६॥

वामनासापुटेनैव आगच्छन्तं विचिन्तयेत् ।
आगच्छतः प्रयोगेण मूलमन्त्रेण शङ्कर ॥ २७॥

आवाहनं प्रकर्तव्यं देवदेवस्य शङ्खिनः ।
आवाह्य मण्डले तस्य न्यासं कुर्यादतन्द्रितः ॥ २८॥

न्यासं कृत्वा च तत्रस्थं चिन्तयेत्परमेश्वरम् ।
हयग्रीवं महादेवं सुरासुरनमस्कृतम् ॥ २९॥

इन्द्रादिलोकपालैश्च संयुतं विष्णुमव्ययम् ।
ध्यात्वा प्रदर्शयेन्मुद्राः शङ्खचक्रादिकाः शुभाः ॥ ३०॥

पाद्यार्घ्याचमनीयानि ततो दद्याच्च विष्णवे ।
स्नापयेच्च ततो देवं पद्मनाभमनामयम् ॥ ३१॥

देवं संस्थाप्य विधिवद्वस्त्रं दद्याद्वृषध्वज ।
ततो ह्याचमनं दद्यादुपवीतं ततः शुभम् ॥ ३२॥

ततश्च मण्डले रुद्रं ध्यायेद्देवं परेश्वरम् ।
ध्यात्वा पाद्यादिकं भूयो दद्याद्देवाय शङ्कर ॥ ३३॥

दद्याद्भैरवदेवाय मूलमन्त्रेण शङ्कर ।
ॐ क्षां हृदयाय नमः अनेन हृदयं यजेत् ॥ ३४॥

ॐ क्षीं शिरसे नमश्च शिरसः पूजनं भवेत् ।
ॐ क्षूं शिखायै नमश्च शिखामेतेन पूजयेत् ॥ ३५॥

ॐ क्षैं कवचाय नमः कवचं परिपूजयेत् ।
ॐ क्षौं नेत्राय नमश्च नेत्रं चानेन पूजयेत् ॥ ३६॥

ॐ क्षः अस्त्राय नम इत्यस्त्रं चानेन पूजयेत् ।
हृदयं च शिरश्चैव शिखां च कवचं तथा ॥ ३७॥

पूर्वादिषु प्रदेशेषु ह्येतास्तु परिपूजयेत् ।
कोणेष्वस्त्रं यजेद्रुद्र नेत्रं मध्ये प्रपूजयेत् ॥ ३८॥

पूजयेत्परमां देवीं लक्ष्मीं लक्ष्मीप्रदां शुभाम् ।
शङ्खं पद्मं तथा चक्रं गदां पूर्वादितोऽर्चयेत् ॥ ३९॥

खड्गं च मुसलं पाशमङ्कुशं सशरं धनुः ।
पूजयेत्पूर्वतो रुद्र एभिर्मन्त्रैः स्वनामकैः ॥ ४०॥

श्रीवत्सं कौस्तुभं मालां तथा पीताम्बरं शुभम् ।
पूजयेत्पूर्वतो रुद्र शङ्खचक्रगदाधरम् ॥ ४१॥

ब्रह्माणं नारदं सिद्धं गुरुं परगुरुं तथा ।
गुरोश्च पादुके तद्वत्परमस्य गुरोस्तथा ॥ ४२॥

इन्द्रं सवाहनं चाथ परिवारयुतं तथा ।
अग्निं यमं निरृतिं च वरुणं वायुमेव च ॥ ४३॥

सोममीशाननागांश्च ब्रह्माणं परिपूजयेत् ।
पूर्वादि चोर्ध्वपर्यन्तं पूजयेद्वृषभध्वज ॥ ४४॥

वज्रं शक्तिं तथा दण्डं खड्गं पाशं ध्वजं गदाम् ।
त्रिशूलं चक्रपद्मे च आयुधान्यथ पूजयेत् ॥ ४५॥

विष्वक्सेनं ततो देवमैशान्यां दिशि पूजयेत् ।
एभिर्मन्त्रैर्नमोऽन्तैश्च प्रणवाद्यैर्वृषध्वज ॥ ४६॥

पूजा कार्या महादेव ह्यनन्तस्य वृषध्वज ।
देवस्य मूलमन्त्रेण पूजा कार्या वृषध्वज ॥

गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ॥ ४७॥

प्रदक्षिणं नमस्कारं जप्यं तस्मै समर्पयेत् ।
स्तुवीत चानया स्तुत्या प्रणवाद्यैर्वृषध्वज ॥ ४८॥

अथ स्तोत्रं
ॐ नमो हयशिरसे विद्याध्यक्षाय वै नमः ।
नमो विद्यास्वरूपाय विद्यादात्रे नमोनमः ॥ ४९॥

नमः शान्ताय देवाय त्रिगुणायात्मने नमः ।
सुरासुरनिहन्त्रे च सर्वदुष्टविनाशिने ॥ ५०॥

सर्वलोकाधिपतये ब्रह्मरूपाय वै नमः ।
नमश्चेश्वरवन्द्याय शङ्खचक्रधारय च ॥ ५१॥

नम आद्याय दान्ताय सर्वसत्त्वहिताय च ।
त्रिगुणायागुणायैव ब्रह्मविष्णुस्वरूपिणे ॥

कर्त्रे हर्त्रे सुरेशाय सर्वगाय नमोनमः ॥ ५२॥

इत्येवं संस्तवं कृत्वा देवदेवं विचिन्तयेत् ।
हृत्पद्मे विमले रुद्र शङ्खचक्रगदाधरम् ॥ ५३॥

सूर्यकोटिप्रतीकाशं सर्वावयवसुन्दरम् ।
हयग्रीवं महेशेशं परमात्मानमव्ययम् ॥ ५४॥

इति ते कथिता पूजा हयग्रीवस्य शङ्कर ।
यः पठेत्परया भक्त्या स गच्छेत्परमं पदम् ॥ ५५॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे
हयग्रीवपूजाविधिर्नाम चतुस्त्रिंशोऽध्यायः ॥